# श्रीकौण्डिन्यशिक्षा

वागीशादिसुरान् सर्वान् कृतार्थान् कर्तुमादिशत्
वटमूले यदाभाति तस्मै चिन्महसे नमः १

अधीत्यं संहितां पूर्वं पदक्रमजटाघनान्
शिक्षादिशास्त्राध्ययनं कुर्यात् कौमारसंयुतम् २

पदानां संधिरुच्छ्वासे संहितानवसानगा
अनुलोमविलोमाभ्यां सा द्विधा पदमन्तगम् ३

वर्णाक्षरस्वराङ्गाणां संधयस्तु यथाक्रमात्
पृथक्पृथगनुप्रोक्ताश्चतस्रः संहिताः स्मृताः ४

पदवत् संहिता यत्र न कार्यं सांहितं यदि
संहिता प्रकृतिर्ज्ञेया सप्त ताः संहिताः स्मृताः ५

पदस्यावग्रहस्यापि संदध्यादुत्तरेण च
क्रमेण प्रोच्यते यत्तु लक्षणेन समन्वितम् ६

सुप्तिङन्तादिभेदेन बुधैस्तत् पदमुच्यते
शमानं च विलङ्घ्यं च नपरं तपरं स्वरम्
अवर्ण्यनिङ्ग्यमिङ्ग्यांशमष्टलक्षणमीरितम् ७

क्रमेण नार्थः पदसंहिताविदः पुराप्रसिद्धाश्रयपूर्वसिद्धिभिः
अकृत्स्नसिद्धिश्च न चान्यसाधकं न चोदयापायकरो न च श्रुतः ८

विपर्ययाच्छास्त्रसमाधिदर्शितात् पुराप्रसिद्धेरुभयोरनाश्रयात्
समभ्युपेयाद्बहुभिश्च साधुभिः श्रुतेश्च सन्मानकरः क्रमो भवेत् ९

उच्चार्य संहिताबद्धे पदे प्रोच्योत्तरं पुनः
संदध्यादुत्तरेणैव क्रमोऽर्धर्चान्तमापयेत् १०

आकारान्तमुदात्तान्तमाङ्परं यत्र दृश्यते
त्रिक्रमं तं विजानीयात् मो षू ण ऊ षु ण स्तथा ११

क्रमाभिगमभिन्नानि दुर्गाणि सुमहान्त्यपि
विलीयन्तेऽर्कभिन्नानि तमांसीव निशात्यये १२

पदद्वयं क्रमादुक्त्वा द्वितीयं प्रथमं पुनः
पुनश्च क्रमवद्ब्रूयात् संधितः सा जटा स्मृता १३

सकृदादिं द्वितीयं द्विः द्विरादिं सकृदुत्तरे
द्विस्तृतीयं सकृन्मध्यं द्विरादिं सकृदुत्तरे १४

जटामुच्चार्य विधिवत्तृतीयं संहितेव हि
विलोमेनानुलोमेन वदेच्चेत् स घनः स्मृतः १५

द्विपदोऽष्टादशपदः पदैः षोडशभिर्युतः
त्रयोदशपदश्चेति चतुर्धा घन ईरितः १६

यत्र द्वयोश्च पदयोः समानस्वरवर्णयोः
तृतीयेन घनेन स्यात् क्रमवद्द्विपदो घनः १७

त्रिक्रमस्य जटामुक्त्वा चतुर्थं संधितो वदेत्
विलोमेनानुलोमेन चाष्टादशपदो घनः १८

तत्त्रिक्रमे पूर्वपदेन युक्ते द्वयं जटावत्क्रमवत्तु शेषम्
उक्त्वा विलोमादनुलोमतश्चेद्वदेद्घनः षोडशभिः पदैः सः १९

प्रथमः पञ्चमः षष्ठो द्वादशैकादशौ तथा
संहितासंधयः प्रोक्ता इतरे पौरुषा घने २०

पदादिविकृतीनां ये पारायणपरायणाः

महात्मानो द्विजश्रेष्ठाः ते ज्ञेयाः पंक्तिपावनाः २१

घनपारायणं यस्तु सकृत् कुर्यात् द्विजोत्तमः
स वै ब्रह्मा स वै विष्णुः स वै रुद्रो न संशयः २२

कोटिजन्मकृतं पापं ब्रुवतां नश्यन्ति क्षणात्
पठन्तः श्रद्धया भक्त्या सहस्राणां गवां फलम् २३

लभेरन् दानजं तस्य पाठकानां च पूजनम्
यः करोति शिवस्थानं लभते नात्र संशयः २४

पठतां श्रद्धया पूजां यः करोति नरोत्तमः
ब्रह्मलोकनिवासी सन् ब्रह्मणा सह मोदते २५

पठतां शृण्वतां वापि पूर्णायुः सर्वसम्पदः
पाठकानां च पूजायामैश्वर्यमतुलं भवेत् २६

प्रग्रहत्वं जटायां स्यादक्षरस्य घनेऽपि च
अन्त्यस्वरपरेऽप्येवं संधिकार्यं न युज्यते २७

पदानां ह्रस्वभाजां तु घनसंधिषु ह्रस्वता
दीर्घत्वमनुलोमे स्यात्सर्वत्र संधितो भवेत् २८

उक्तं पुनः पञ्चपदं च वाक्यमित्युत्तरं चापि तथैव सर्वतः
ज्ञेयं बुधैः पूर्ववदन्यदुक्तं तत्रस्थलक्ष्यं न तु पूर्ववद् भवेत् २९

द्रप्सश्चित्रं सप्त तेपः पुनश्चेन्नाकं विष्णोरक्षदेवस्य गोमान्
अग्ने त्वं न स्यादयं नः परित्वा गोमा यज्ञं त्वस्य लोपः सहस्व ३०

यास्ते प्राणमग्ने च पवस्व द्यौस्ते रक्षा यैव चायुरग्ने नयैव
दध्यप्यस्मिंश्चापिजश्चत्वमग्नेनैक्यश्चाकारोऽपि यः प्राणतः स्यात् ३१

आयुर्वर्चस्वत्वमग्ने तन् पा ज्योतिष्मन्तं मानुषीभ्यो विधम्
त्वामारण्यं पावको ग्ने जनिष्वागत्याघर्वासीदचाग्नित्वं लोपः  ३२

ता अस्या इमं स्ते सुवर्यं प्रमातृप्रेद्धो यक्षत्या त्वमग्ने समास्त्वा
माघावाचायं रपजातो निषीदन्नप्रेदग्नेस्य त्वमग्नेत्वलोपः  ३३

उरुव्येङ्गिर इति क्रम्या घनोर्षयति पानकः
भवत्यग्नेऽग्न इत्यादिष्वकारो लोप उच्यते  ३४

उदात्ततुनुपूर्वो वश्चादौ लोपो भवेत् तदा
ऋत्परस्य नकारस्य णत्वं प्राप्तमितीरितम्  ३५

ऊकारस्याप्यनित्यस्य वकारादेश ईरितः
ह्रस्वोपलक्षणन्यायात् घनसंधिषु सर्वतः

न सकारष्षत्वमेति महि सृज्यध्वमत्र वै
ऋकाररेफवत्पूर्वं बलवत्तरमुच्यते  ३६

विलोमेषु तृतीयो नश्चान्नमन्येन्य उच्चकम्
नो णं नाप्नोति प्रकृतावाप्नोत्येव तृतीयनः कः  ३७

पुनःशब्दे विसर्गस्य सत्वं स्यात्तु परे कृधि
विश्वतः क्षत्रमित्यत्र न विसर्गः समाप्नुयात्  ३८

इड इत्यत्र विसर्गश्च परिधिग्रहणे परे
सकारमाप्नुयात्तत्र ग्रहणप्रबलादि ---  ३९

स्यान्मकारः केवलोनुस्वारो ज्ञघ्नपरोऽपि वा
अन्यधर्मेण रहितो द्विमात्रः परिकीर्तितः  ४०

अप्यकारादिवचनं प्रकृतौ कार्यभाग्भवेत्

विलोमेषु च सर्वत्र कार्यभाङ्ग न भवेत्सदा ४१

यरौ स्यातां यस्य नस्य प्रकृतौ तस्य पौरुषे
निषेधः प्रकृतौ यस्य विलोमे तस्य वै भवेत् ४२

अनन्यस्वरसंमिश्रात्तत्तस्मादयुतात् पदात्
उक्ता जटादिषु ह्यत्र वागमः पर ईरितः ४३

भवेदप्यपपूर्वस्य छस्य पूर्वागमः स्मृतः
हकारान्नणमा ऊर्ध्वाः पूर्वं तु प्रसरन्दिहात् ४४

एत्वमवर्णपूर्वे ताविवर्णोत्तर आप्नुतः
उद्दोकारमयमेदवमोदत्परो न चेत् ४५

ऐदायमावमौकारश्चाप्नोत्येवात्परे तथा
ऋकारोर्ध्वेऽवर्णपूर्वे विकारमरमाप्नुयात् ४६

ओपप्रावचपूर्वश्चेदारमृत्पर आप्नुतः
एषां संधावुदात्तश्चेदुदात्तसंधिरुच्यते ४७

स्वारसंधिश्च विज्ञेयो नित्यस्वारानुदात्तयोः
निमित्तं वापि लक्ष्यं वा द्विपदग्रहणं यदि ४८

स्यात्क्रमे कार्यमेकेन विलोमेषु द्वयेन च
टपूर्वो लश्च टश्चापि तयोः संधिर्यदा भवेत् ४९

जटादिषु प्रपद्येतां द्वित्वळत्वमुभौ तथा
इवर्णोकारयोः स्यातां यवावुदात्तयोः क्रमात् ५०

परोऽनुदात्तः स्वरितः स्यात्स स्वारः क्षैप्र उच्यते
अखण्डपदमध्यस्थः स्वर्यते यवसंयुतः ५१

अपूर्वो नीचपूर्वो वा स स्वारो नित्य ईरितः
नानापदस्थो निहत उच्चाद्यः स्वरितो भवेत्  ५२

सोऽयं प्रातिहतः प्रोक्तः स्वारोदात्तपरो न तु
अकारेणानुदात्तेन संमिश्र उच्यते एङ्कित् एङिति  ५३

स्वर्यते चाभिनिहितः स स्वारो ज्ञायते बुधैः
उकारादुच्चकान्नीच उकारे परतः स्थिते  ५४

उभयोः संधितः प्रोक्तः प्रश्लिष्टः स्वरितो बुधैः
विवृत्त्यां पदयोरुच्चान्नीचः स्वारः परो भवेत्  ५५

स पादवृत्तो विज्ञेयो नोदात्तस्वरितोत्तरः
उदात्तात्परतो नीच आप्नुयात् स्वरितं पदे  ५६

सोऽयं तैरोव्यञ्जनः स्यान्नोदात्तस्वरितोत्तरः
इउवर्णौ यदोदात्तावापद्येते यवौ क्वचित्  ५७

अनुदात्ते परे विद्यान्नित्यं क्षैप्रस्य लक्षणम्
स्वारोत्तरे स्थितः स्वारश्चान्यो नीचोऽणुमात्रकः  ५८

पूर्वस्य कम्पसंज्ञा स्यात् ह्रस्वश्चेद् दीर्घमेति सः
स्वराः षोडश विज्ञेयाः स्पर्शाः स्युः पञ्चविंशतिः  ५९

अन्तस्थाश्च चतस्रश्चेदूष्माणश्च  षडीरिताः
द्व्यनुस्वारौ विसर्गो ळः स्वरभक्तिश्चतुर्यमाः  ६०

वर्णानां षष्टिसंख्या स्यादित्युक्तं याजुषे मते
परं स्वरादनुस्वारं व्यञ्जनं व्यञ्जने परे  ६१

द्विरूपमिष्यते रेफात् स्वरपूर्वात् परं च यत्

लवाभ्यामुत्तरस्पर्श इति प्राप्तिश्चतुर्विधा ६२

न द्वितीयचतुर्थानां द्वित्वं तत्प्राप्तिगोचरे
पूर्वागमस्ततः पूर्वं वेद्यश्छखिभुजेषु च ६३

यत् युतस्वरयोर्मध्ये --- पूर्वागमोऽपि च
उच्चारणादिना स्पष्टं तदत्र न विधीयते ६४

अघोषादूष्मणः स्पर्शे परे तन्मध्य आगमः
प्रथमस्पर्शसस्थानस्तयोरव्यवधायकः ६५

पदान्तस्येतरस्यापि प्रथमस्य द्वितीयता
सषयोः परयोः स्यात्तु चापदान्तस्य शे परे ६६

न व्यञ्जनेऽवसानस्थे द्वित्वं रेफविसर्गयोः
जिह्वामूलीयाभिधेयोपध्मानीये च कुत्रचित् ६७

न स्वरे चाभिधानान्यप्रथमे चोष्मणः परे
न सरूपसवर्गीयपरो वर्णो द्विरुच्यते ६८

निषेध उत्तमपरे स्पर्शानां यमनुत्तमे
अनुस्वारस्य न द्वित्वं सस्वरे व्यञ्जने परे ६९

न स्पर्शे लवयोर्लस्य हशोरस्वरिते च वे
पदान्तेष्वानुनासिक्ये पदसंहितयोस्तथा ७०

प्राकृतो वैकृतश्चापि तद्धर्मा बुध्यते सुखम्
पदमध्यानुनासिक्ये स्पर्शात्पूर्वे तदुत्तमः ७१

अन्तस्थाभ्यः पुरा तच्चेत्सैवान्तस्थेति निर्णयः
स्वरभक्ती रलौ स्यातां परे ह्यूष्मणि तस्य तु ७२

द्वित्वे चाभिनिधानान्यप्रथमे च परे न तत्
चतुर्भ्यः प्रथमादिभ्यः उत्तमे परतः क्रमात् ७३

प्रथमाद्यास्तु नासिक्या हकारात्केवलस्तथा
शकारः प्राकृतेरूर्ध्वं च नासिक्यो न विद्यते ७४

शषसाभिनिधानानां यद्यन्तस्थोत्तमात्क्रमात्
लवयोः संयुतौ यत्र नीचोच्चस्वरितौ यदि ७५

द्वित्वं तत्रैव योगादेः ऐत्पूर्वे वपरे न हि
असंयुतलकारस्य द्विपादत्वं सदा भवेत् ७६

धूङ्ङ्णादङ्ङ्णावोच्छन्सीघ्नन्तृन्द्वश्च बैल्वोऽपि च
विशेषविधिभिस्तेषां मात्राधिक्यं भवेद्यदि ७७

अच्पूर्वकः पदान्तो ङो यकारे परतः स्थिते
द्विरूपमेति सर्वेषामृषीणां मतमीदृशम् ७८

अव्यञ्जनपरे यो ङो द्वित्वं नैति पदान्तगः
अनृकारपरे हे मः पदान्तोऽच्पूर्वकस्तथा ७९

अव्यञ्जनर्कारपरे वकारे दीर्घपूर्वतः
ङनौ पदान्तावच्पूर्वौ हि यकारपरौ तथा ८०

वत्सानुसृतिराख्याता तथा वत्सानुसारिणी
वैशेषिका पाकवती मध्या चाथ पिपीलिका ८१

तथा सवर्णदीर्घी चोभयदीर्घीति या स्मृता
इत्येवमष्टसंज्ञास्तु विवृत्तीनां च भेदतः ८२

ह्रस्वपूर्वा च या व्यक्तिः तथैवोत्तरदीर्घिता

सा वत्सानुसृतिः प्रोक्ता सा मात्रा कालस्तथा ८३

ह्रस्वात् पूर्वा विवृत्तिः स्यात् प्लुताद्दीर्घात्परा च या
वत्सानुसारिणी सेयमेकमात्रेण संयुता ८४

व्यक्तेराद्यन्तयोर्यस्या दीर्घौ यद्यसवर्णकौ
यदि मध्ये विसर्गः स्यात् तदभावोऽथवा यदि ८५

सा तु वैशेषिका स्यात्साणुमात्रा तथैव च
पूर्वे यत्रोत्तरे चैव ह्रस्वो यदि भवेत् तदा ८६

पादोनमात्रिका तत्र सा हि पाकवती स्मृता
यस्याः सवर्णदीर्घौ स्त उभयत्रोच्चनीचकौ ८७

विसर्गस्तत्र च स्वारः सन्धौ मात्रा च मध्यगा
मध्यगालक्षणे तत्र विसर्गो न भवेद्यदि ८८

पिपीलिकेति विज्ञेया सा वृत्तिः पादमात्रिका
सवर्णदीर्घौ यद्यादावन्ते भिन्ने विसर्गकः ८९

सवर्णदीर्घ्येकमात्रा न संधौ स्वरितो यदि
विसर्गस्तत्र नो चेत् सा मात्रोभयदीर्घ्यथ ९०

अनुस्वारो द्विरुक्तोऽन्त्यपञ्चमश्च द्विमात्रिकः
ह्रस्वात्परः प्लुताद्दीर्घात्केवलस्त्वेकमात्रिकः ९१

सविसर्गं हरिपदं प्रणवात्पूर्वमिष्यते
हरिशब्दे विसर्गस्य न संधिः प्रणवोत्तरे ९२

केवलः स्वरसंयुक्तो मात्रिकासहितस्तथा
अङ्गं च वर्णसारं च पञ्च वर्णक्रमाः स्मृताः ९३

उत्तमो लक्षणज्ञानी लक्ष्यज्ञानी तु मध्यगः
लक्ष्यलक्षणयोर्ज्ञानी तद्धि यत्नं प्रशस्यते ९४

लक्षणं न त्यजेद्धीमान् संप्रदायोऽन्यथा भवेत्
लक्षणेन विना शिष्यः संप्रदायो विनाशवान् ९५

नासौ तत्फलमाप्नोति सम्यक्पाठमजानतः
लक्षणेन विना वर्णा निर्मलानि न शुध्यति ९६

प्रमदा रूपसंपन्ना दरिद्रस्येव योषिता
स्वरहीना यथा वाणी वस्त्रहीनास्तु योषितः ९७

एवं वर्णा न शोभन्ते प्राणहीनाः शरीरिणः
लक्षणं यो न ना वेत्ति न तस्य फलभाग्भवेत् ९८

लक्षणज्ञो हि विप्राणां सकलं भद्रमश्नुते
आचार्योपासनाद्योगात्तपसः प्राज्ञसेवनात् ९९

विविच्य कथनात्कालात् षड्भिर्विद्या प्रपद्यते १००

इति श्रीकौण्डिन्यशिक्षा समाप्ता

Reference:
Abhyankar, K.V., and Devasthali, G.V., *Vedavikṛtilakṣaṇasaṁgraha: A collection of twelve tracts on Vedavikṛtis and allied topics*, (Poona: Bhandarkar Oriental Research Institute, 1978).